॥ श्रीदक्षिणामूर्ति नवरत्नमालिकास्तोत्रम् ॥

॥ श्री दक्षिणामूर्ति नवरत्नमालिका स्तोत्रम् ॥

मूलेवटस्य मुनिपुङ्गवसेव्यमानं
  मुद्राविशेषमुकुलीकृतपाणिपद्मम् ।
मन्दस्मितं मधुरवेषमुदारमाद्यं
  तेजस्तदस्तु हृदि मे तरुणेन्दुचूडम् ॥ १॥

शान्तं शारदचन्द्रकान्तिधवळं चन्द्राभिरमाननं
  चन्द्रार्कोपमकान्तिकुण्डलधरं चन्द्रावदातांशुकम् ।
वीणापुस्तकमक्षसूत्रवलयं व्याख्यानमुद्रांकरै-
  र्बिभ्राणं कलये हृदा मम सदा
शास्तारमिष्टार्थदम् ॥ २॥

कर्पूरपात्रमरविन्ददळायताक्षं
  कर्पूरशीतलहृदं करुणाविलासम् ।
चन्द्रार्धशेखरमनन्तगुणाभिराम-
  मिन्द्रादिसेव्यपदपङ्कजमीशमीडे ॥ ३॥

द्युद्रोधः स्वर्णमयासनस्थं
  मुद्रोल्लसद्बाहुमुदारकायम् ।
सद्रोहिणीनाथकळावतंसं
  भद्रोदधिं कञ्चन चिन्तयामः ॥ ४॥

उद्यद्भास्करसन्निभं त्रिणयनं श्वेताङ्गरागप्रभं
  बालं मौञ्जिधरं प्रसन्नवदनं न्यग्रोधमूलेस्थितम् ।
पिङ्गाक्षं मृगशावकस्थितिकरं सुब्रह्मसूत्राकृतिम्
  भक्तानामभयप्रदं भयहरं श्रीदक्षिणामूर्तिकम् ॥

५॥

श्रीकान्तद्रुहिणोपमन्यु तपन स्कन्देन्द्रनन्द्यादयः
  प्राचीनागुरवोऽपियस्य करुणालेशाद्गतागौरवम् ।
तं सर्वादिगुरुं मनोज्ञवपुषं मन्दस्मितालङ्कृतं
  चिन्मुद्राकृतिमुग्धपाणिनळिनं चित्तं शिवं कुर्महे ॥ ६॥

कपर्दिनं चन्द्रकळावतंसं

त्रिणेत्रमिन्दुपतिमाननोज्वलम् ।
चतुर्भुजं ज्ञानदमक्षसूत्र-
पुस्ताग्निहस्तं हृदि भावयेच्छिवम् ॥ ७॥

वामोरूपरिसंस्थितां गिरिसुतामन्योन्यमालिंगितां
श्यामामुत्पलधारिणी शशिनिभांचालोकयन्तं शिवम् ।
आश्लिष्टेन करेण पुस्तकमधो कुंभं सुधापूरितं
मुद्रां ज्ञानमयीं दधानमपरैर्मुक्ताक्षमालां भजे
॥ ८॥

वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम् ।
कञ्चनदेशिकमाद्यं कैवल्यानन्दकन्दळं वन्दे ॥ ९॥

इति श्री दक्षिणामूर्ति नवरत्नमाला स्तोत्रं सम्पूर्णम् ॥